श्री १०८ परमहंस परिव्राजकाचार्य दण्डिस्वामि श्रीघनश्यामानन्द तीर्थ के करकमलयोः समर्पिता ग्रन्थकर्त्रा




॥ श्रीः ॥

# शिवास्तुतिः

दिगन्ते विश्रान्तिर्जननि!
यशसां याचि पटुता
तवोन्मीलन्नीलाम्बुज-
नयनलीला परिणतिः ॥

उमापतिशर्म्मद्विवेदस्य ।



उमापतिकृता

# शिवास्तुतिः

## कुवेरनाथमाहात्म्यञ्च



श्यामसुन्दरशर्मकृतं
शिवाटिप्पणञ्च

अमवानिवासि-श्री-गंगारायतनूज-श्री-जयपालराय
वितीर्णसहायतया संवत् १९८१
एकाशीतितमे वर्षे मुद्रितम्

प्रकाशकः-
उमापतिशर्मा द्विवेदः कुवेरनाथविद्यालय-
प्रधानाध्यापकः कुवेरस्थान
कसया, गोरखपुर ।

बी. एल्. पावगी द्वारा
हितचिन्तक प्रेस, रामघाट, बनारस सिटी में मुद्रित ।

थमावृत्तिः १००० ] १९२४ [ मूल्यम् ।) आणकचतुष्टयम्

पुस्तकप्राप्तिस्थानम्-कुवेरनाथ विद्यालय कसया-गोरखपुर
विद्यालयाध्यक्ष जगदानन्द शर्म्मा ब्रह्मचारी
अथवामिश्रपोखरा ³⁄₁₁₂ बनारस ।

॥ श्रीः ॥

विदितचरमेवैतद् विदुषा मविदुषाञ्च यदिह खलु सत्स्वपि चिरन्तनेषु विचक्षणानाम्परमपुरुषाणामनन्तेषु निबन्धेषु ध्रुवमाधुनिकानाम्परिकरः साहसमात्रमिति, किन्तु " परस्वादानेच्छाविरतमनसो वस्तु सुकवेः । सरस्वत्येवैषा घटयति यथेष्टम्भगवती " तिश्रीमदाचार्य्यवचनमनुसरत् केन नामनिरुध्यतां सारस्वतन्तेजोविस्फूर्जितम् । न हि कवयो नोत्पत्स्यन्ते, न च शब्दाः समाप्तिमेष्यन्ति, नापि सहृदयानां हृदयेषुप्रत्यग्राणाम्भावानां समुद्भवो न भविष्यतीति साम्प्रतिकसत्सन्दर्भाणामुपेक्षणमपि साहसमात्रमेवेति निश्चिनुमः । इयमिदानीं मतिमतां सम्मुखीना हार्दिकान्भावानुद्गिरन्ती विविच्य समालोचनीया भवद्भिः श्रीमदुमापतिकृता शिवास्तुतिः । नैतदतिरिच्यते, चेदुच्यतां य " द्दिगन्तेविश्रान्तिर्जननि ! यशसांवाचि पटुता । तवोन्मीलन्नीलाम्बुजनयनलीलापरिणति" रिति कवेर्वाचोयुक्तिः स्फुटमनुभूयत एवैतस्यामिति । वयन्तु ब्रूमः, अस्याः शिवाया अहो प्रौढिपरिपाकः, अहो गाम्भीर्य्यं, किञ्चाहो गीस्तरङ्गभङ्गी, किमधिकेन प्रतिपदमेतस्याः साहित्यसारसञ्चयैश्चिरञ्चेतश्चमत्कुरुत इति भावुकजनमानसप्रत्यक्षैकसाक्षिकम् । स्मरणीयश्चात्र महाकविकालिदासेनाभिहितम् ।

" पुराणमित्येव न साधुसर्वं–नचापि काव्यन्नवमित्यवद्यम् ॥
सन्तः परीक्ष्यान्यतरद्भजन्ते–मूढः परप्रत्ययनेयबुद्धिः ॥

इति प्रार्थयते—

श्रीकाशीनाथ शर्म्मा द्विवेदः ।

* श्रीः *

# ॐ नमः शिवायै



( १ )

शिवानन्दस्रोतःसरिदुदधिरेषा श्रुतिसखी-
महः स्थाणुस्थानञ्जगदवसिति वा व्यवसितिः ॥
अहो वीजं योमापतितमपि सन्तारितुमनाः
शिवा भूयात्सोमापतिवचनभङ्गीप्रणयिनी ॥

( २ )

महिम्नां यस्या स्ते समुदय मुदाहर्तुमनसः
पराञ्चन्त्येवास्माज्जननि ! परमेष्ठिप्रभृतयः ॥

---

कृत्वाङ्के तनुजनुषं, करिवरवदनं सुपूज्यमानन्यम् ॥
सुमना वराय दातु, गिरिजामाता मुदे भवतु ॥१॥

( १ ) १ शिवा शिवास्तुत्योर्विशेषणानि तत्रतत्राभेदाध्यवसायः शिवानन्देति स्तुतिपक्षे शिवाया इति च्छेदः शिवपक्षे शिवस्येति २ स्तुतिपक्षे उ इति पृथक् मामित्यस्यार्थेमा शब्दः ३ स्तुतिपक्षे स्तोतुर्नाम शिवापक्षे शिवनाम शिष्टं स्पष्टं-शिखरिणी वृत्तम्-

( २ ) १ महिम्नां समुदयं समुदाहर्तुमनस इत्यन्वयः अस्मान्महिमसमुदयात् २ कर्तुंमनसो मे इत्यस्य विशेष्यमध्याहार्यमन्यत्स्पष्टम्-

तथा ऽपि त्वान्दासे सदयमनसङ्कर्तुमनसो
भवेद्बालालापानुगुणरमणीया स्मृतिरलम् ॥

( ३ )

पुरो दर्शन्दर्शन्दुरितशतदुष्पाकपदवीं
त्रसन्तम्मामम्मातर्विवृतवदनम्वीक्ष्यविदृशम् ॥
शिवे ते माभैषी रितिवदनकालस्मितमुख–
प्रभापुञ्जङ्कोषाङ्कथय सुकृतानाम्प्रतिफलम् ॥

( ४ )

विषीदन्तम्भूयो विषमविनिपातादशरणं
रुदन्तम्मातर्मातरिति विलपन्तम्भवति ! माम् ।
निरीक्ष्य द्रागुद्यत्करुणहृदये यस्स निचित–
स्तवान्तर्भावो ऽन्तर्भवति कतमस्याम्परिणतौ ॥

( ५ )

शिवे ! त्वत्पादाब्जे मम नयनपद्मादविरतं–
गलद्वारान्धारा व्रजति मधुपाराध्यमधुताम् ॥
ततो ऽसौ रागार्द्रा पुलक मनु मे मातु रुदिता
जगन्नम्या रम्या पुलकपरिपाटी जयति ते ॥

---

( ३ ) १ विवर्णमुखम् २ विकृतदृष्टिम् ३ ते मुखप्रभापुंञ्जमित्यन्वयः–
( ४ ) १ उच्चावच्च पातात् विषयदौरवस्थ्या दितिभावः २ उद्यत्करुणञ्च तद्धृदयन्तस्मिन्नित्यर्थः निचितः सञ्चितः ३ अन्तर्भावः – आन्तरिकोभाव इति भावः–
( ५ ) १ भ्रमरपेयपुष्परसताम् प्राप्नोतीत्यर्थः

( ६ )

क्षितीशानाम्भ्राम्यद्भ्रुकुटिकुटिलेक्षापरिचया—
द्विवर्णे मय्यम्ब ! प्रसृतकरुणा द्रागशरणे ॥
उपेक्ष्यैवाँज्ञप्ते कृतपरिकरानप्यनुचरान्
दयापूरोत्फुल्ला मम हृदयमुल्लासयसि किम् ॥

( ७ )

दरिद्रो ऽयं हेय ॐ प्रकृतिविषमो ऽनार्य्यचरित—
स्तथा ऽयुक्तश्चेत्थं मयि धृतघृणानांखलु नृणाम् ॥
विपक्षे द्रागम्ब ! त्वामिह वितरन्तीष्टनिवहान्
ममानन्दैस्तेषामपि हृदयहृत्त्वम्फलासि किम् ॥

( ८ )

शिवे ! ऽसह्यक्लेशाज्जननि ! मुहुरित्येव लपिते
सिताऽम्भोजाभन्ते मुखमनुगृहीत्या विकसितम् ॥
तवेदन्नो किञ्चिन्मम तादियदेवा ऽस्ति सकलं
दयातो यन्मात ! मयि नयनपातम्प्रणयति ॥

---

( ६ ) १ भ्राम्यन्त्या भ्रुकुट्या कुटिला येक्षावीक्षितिस्तस्याः परिचयाद्धेतोः २ विलक्षेमयीत्यस्य विशेषणम् ३ अनुशासितसकलसाधनकाटिबद्धान् अनुचरानित्यस्य विशेषणम् उपेक्ष्यैवेत्यस्य कर्म—

( ७ ) १ इत्थम्भूतानां नृणां विशेषणम् २ प्रातिकूल्ये इष्टनिवहान् वितरन्ती त्वमित्यन्वयः ३ उक्तनृणामपीत्यर्थः ४ हृदयहारित्व मिति भावः यद्वा त्वामिति पृथक् पदं कि फलसीति रहस्यम्—

( ८ ) १ अनुग्रहेण २ मुखङ्कर्तृ—

( ९ )

शिवालापाऽऽसक्तेः क्षणमनभिवीक्ष्या ऽथ निकटे
पतन्तम्मान्दृष्ट्वा सुखितशरणायातंजनते ! ॥
प्रिये हाँ साक्षेपा मयि बहुदया सा ऽनवँहितेः
सखेदा ऽपि स्वास्मिन् क्व नु तव दृगास्मि न्नवतरेव् ॥

( १० )

इदं वो ऽम्बाले ! ऽङ्कीकृतकुमुदबन्धोरपि च मे
तृणज्ज्योत्स्नास्नानं विहृतिरथवा नन्दनवने ॥
यदि स्निग्धा बाले मयि किल सुधालेपीनिपुणा
घनानन्दाऽधारा परिणति रुदारा तव दृशः ॥

( ११ )

क्षणो ऽयङ्क्षेपाढ्य ॐ क्षितितलचराणाङ्किमु शिवे !
दुरापो देवानाममरपतिसेवारतिजुषाम् ॥
अहो यस्मिन्नस्मिन्मयि पतितकाये कृतदया
समुत्तिष्ठोत्तिष्ठ त्वमिह जय जीवेति वदसि ॥

---

( ९ ) शिवसंलापसम्बन्धात् २ बहुव्रीहिगर्भं संबोधनपदम्–३ शिवे–४ हां कष्टं साक्षेपा यद्वैकमेव पदम्– ५ अनवधानताहेतोरिति भावः ६–मयीत्यर्थः—

( १० ) अम्बाले इतिमातृशाचि संबोधनम् २ मयीत्यस्य विशेषणम् ।
( ११ ) यस्मिन्निति क्षणपरामर्शि ।

( १२ )

अहो पांपा दौपामरमनाधिगत्या ऽपि शरणं
सरन्तन्त्वत्पादाम्वुरुहमभिवीक्ष्यां ग्रहिणि ! माम् ॥
न ताच्चित्रं यद् द्रौगाभिपतसि पातुन्त्रिनयने !
विचित्रन्त्वेतद्याच्त्रिदशपरिवारन्त्रपयसे ॥

( १३ )

अये ऽव्या मा मम्व ! त्वमिति सकृदेतन्मदुदितं
यदायातङ्कर्णौ तव सति ! तदैवाऽव्यवहितम् ॥
करालम्बान्दित्सौ त्वयि चकित दृष्ट्या विरलय-
न्त्यमू वाला वालव्यजनवरसञ्चालनविधिम् ॥

( १४ )

धृतालक्ताङ्काञ्चित्कलितफणिवल्लीवरदलां
तथा ऽन्याङ्कर्पूरप्रभृतिभृतकारण्डककराम् ॥
अहो दासीरेताः स्थगयसि तु विस्मापितहृदो
मनागाकर्ण्यासमद्वदनगलिताङ्गद्गदगिरम् ॥

---

( १२ ) हेता पञ्चमी २ नीचपर्यन्तम् ३ हठशालिनिस्त्वतन्त्रे-इति तात्पर्यम् ४ आभिधावसीत्यर्थः ५ सुरसमूहम्

( १३ ) अव्या इति क्रियापदम् २ सतीति सम्बोधनम्-

( १४ ) १ ताम्बूली २ पात्रविशेषः ३ दासीरित्यस्य विशेषणम ।

( १५ )

स्मृतिर्वा सेवा वा ऽप्यहह कलहो वा प्रणतयः–
स्तुतिर्वा दुर्वाचस्त्वयि निहितबुद्धे १ किमपि वा ॥
ममा ऽसम्भाव्यन्नो तदपि नितरान्ध्येयमिति ते
कृपापूरोद्रेकस्सकलमिदमेकङ्कलयति ॥

( १६ )

उमे मन्यं यत्पर्य्यचरमहमीशानमनिशं
स्वभावादेवैतत्फलमिव भवत्तत्परकृतेः ॥
त्वदुत्सङ्गे शम्भोर्गणपतिमुदीक्ष्या ऽपि सुखिनो
मदर्थन्त्वम्भिक्षाङ्कुरतलकपाले वितरसि ॥

( १७ )

दिशन्त्वा ऽऽनन्दम्मे सुभगपदपद्मासनभृतो
दशाख्येथाऽऽकारेष्वपि गतविकारास्समरसाः ॥
सदालोकोन्निद्राः परमसुखसौभाग्यनिलया
इमे विभ्राजन्तो जननि ! ननु मुक्तास्तव नखाः ॥

---

( १५ ) १ कलयतीत्यस्य कर्तृपदम् २ अविशेषमित्याशयः–

( १६ ) १ सेवामकार्षम् २ परिचर्य्याफलमिव–३ तव क्रोडे ४ शम्भो विशेषणम्–कृतकार्यस्येति भावः ५ भिक्षापात्रभूते शम्भोर्नरकपाले इत्यर्थः–

( १७ ) नखेषु जीवन्मुक्तत्वमारोप्यते श्लेषेण–१ नखपक्षे पदपद्म–एवासने बिभ्रतीति–ते–मुक्तपक्षे सुभगपदे–सुस्थाने पद्मासनभृत इत्यर्थः। पद्मासनमासनविशेषः २ नखपक्षे दशसंख्यया ऽऽख्येया कारास्तेष्वित्यर्थः। मुक्तपक्षे दशा विवर्तादिब्रह्मदशान्ताभिराख्येयाकारेषु-विषयेषु गतविकारा इत्यर्थः अपूर्णोपमानात् मौक्तिकान्यपीत्यर्थः।

( १८ )

शिवोत्सङ्गे वासस्सततमपि दासस्सुरतरु-
विलासो नागास्यप्रमुखसुखसाम्ये ऽप्रतिहतः ॥
अमुष्याहो देवाः पदयुगलसेवासु निरताः -
क्षणं ध्येन ध्यावञ्चरणजलजातञ्जननि ! ते ॥

( १९ )

प्रफुल्लत्कह्लार[1]म्परिकलितताराँ[2] ध्यदि भवेत्
स्फुरन्मुक्तायुक्तङ्कमल मथ वा मुक्तमुकुलम्[3] ।
ततस्तुल्यञ्ज्योत[4]च्चरनखरजद्योतमयि ! ते-
सलाक्षाङ्घ्रिं वन्दे प्रणत[5]कमलाक्षादिकसुरम् ॥

( २० )

शिरो रोढुं शम्भोः पदनखररूपङ्कु[1]रमय-
न्न्यदाद्यत्तांरांशु[2]न्निजहृदयसारांश[3]मिति[4] ते[5] ॥
हृदाशून्यः कान्त्या विजितपरपद्मे तव पुनः-
पदाम्भोजे जातः कमलवनवैरी हिमकरः ॥

---

( १८ ) १ निराबाध इतिभावः

( १९ ) १ अरुणकमलम् २ नक्षत्रगणकीर्णमितितात्पर्यम् ३ त्यक्त-शैशवम्-विकसितमिति भावः ४ ज्योतादित्यारभ्य द्योतान्तमङ्घ्रिविशेषणम् ५ प्रणताः कमलाक्षादिकाः विष्ण्वादयस्सुरा यत्र तमित्यप्यङ्घ्रिविशेषणम् ।

( २० ) १ बलिम्- २ विशदांशुम्- ३ सारभागम्- ४ अस्माद्धेतोः ५ तुभ्यम् न्यदादित्यस्य सम्प्रदानम्-अयम्भावः कमलवत्ते चरणे सत्यपि-चन्द्र-मसा शम्भुशिरोरोहणाय तुभ्यञ्चरणनखरूपतया निजहृदयसारभागः करो दत्तः इति हेतोश्चन्द्रमा अप्यसौ हृदा शून्यो निस्तेजा धृतगम्भीरखनीखनीलिमा जातः

( २१ )

त्वदन्या का मान्या त्वदुपजनि[1]धन्याद्रितनये !
जननया[2] यस्यास्ते पदमिति दरार्त्तम्पुनरदः[3] ।
उदञ्चन्मञ्जीरन्नतिविकलहीरं[4] व्ययनमय–
च्छिर[5]: सौनासीरङ्कृतकरपुटीरम्यमुकुटम् ॥[6]

( २२ )

वहिर्यद्विभ्राम्यन्त्यमररमणीमौलिगलित–
स्रजश्चम्पापुष्पैः[1] परिकलितकम्पा मधुलिहः ॥
ममत्वन्तावत्त्वत्पदकमलयो[2]स्तत्त्वविदय–
न्दधानः स्वोल्लासैः स्मितयति मनो ऽलिस्तव मुखम् ॥

( २३ )

पदौ जङ्घे ऊरू कटिमुदर मूर्द्ध्वंह्वदयतः–
पतन्त्यस्मद्धेतो[1]: क्षरदति पय[1]: प्रस्नुतकुचौ ॥

---

किञ्च करप्राप्तेः सविशेषाभ्याञ्चरणाभ्यामितरपद्मानिविजितानीति स्वविजये चन्द्रमसः करदानरूपां कृतिमेव हेतुमुरीकृत्य तानि तम्वैरिणश्चामन्यन्त इति सारः

( २१ ) १ जन्म २ जनन्याः पदमिति दरार्त्तम्विभीतं शिरोविशेषणम् ३ पदम् ४ प्रणतिव्यापारविपर्य्यासितमञ्जीरहीरकामितिभावः ५ पदकर्त्तृकं क्रियापदम्– ६ ऐन्द्रंशिरोविशेषणम् ।

( २२ ) १ चम्पकेषु भ्रमरा नपन्तीति संप्रदायात् मधुलिट्कर्त्तृका क्रिया २ ममतां दधान इत्यन्वयः– मनो ऽलिविशेषणम्—

( २३ ) १ अस्मद्धेतोः पूर्वोक्तावयवेषु पतन्तीति शत्रन्तं गिरिजादृगित्यस्य विशेषणम्– अस्मद्धेतोरिति मध्यमणिन्यायेन क्षरदतिपयः प्रस्नुतकुचावित्यत्राप्यन्वेति—

तटावारोढुन्तौ प्लवत इव कालेन बहुना
कृपापारावारे त्वदुरसि निविष्टा गिरिशदृक् ॥

( २४ )

तरंङ्गैरुन्नीता पुनरपि च मन्ये तव हृदो
निरायासा दांसे कृतपरिकरा ऽस्मत्सुखदिशा ॥
समुत्फुल्लोन्मज्ज्यानति विषमकम्बुम्परिलसत्-
स्रजम्मुक्तादीनामुपरि पतिता पल्लवयति ॥

( २५ )

अयत्नैरप्राप्या वलयमुखरत्नैः कुसुमिता
सदानन्दाद् भूय ः पुलकितशतै ः कण्टकमयी ॥
कृतस्थाण्वासङ्गा कराकिसलयाऽऽमोदजननी
फलन्तत्तत्सूताम्भुजयुगलवल्ली तव शिवे ! ॥

( २६ )

स्वकामानाम्पूत्त्यैं शतमवयवान्ते प्रणमतो
ममायासन्दृष्ट्वा कुतुकितमनोधैर्य्यकलिते ! ।

---

( २४ ) १ हृदस्तरंगैरिति सम्बन्धः २ भक्ताय कृतितत्परा ३ ममसुख हेतुनेति भावः समुत्फुल्लेत्यनेनान्वेति ४ विनिगीर्णोपमेयम् उपमानशेषाम्-ग्रीवामिति भावः ५ इत्यादि सर्वं गिरिशदृग्विशेषणम् सैव पल्लवयतीति क्रियायाः कर्त्री—

( २५ ) अकृतपुण्यादिश्रमैर्दुर्लभा २ कृतशिवसङ्गा वल्लीपक्षे कृततरु सङ्गमा—३ भुजयोर्वल्लीत्वारोपः—

( २६ ) ते अवयवान् प्रणमत इति ममेत्यस्य विशेषणम् २ कौतुकित-मनसा धैर्य्यमालम्बिते—इति सार्थं सम्बोधनम् ३ ईक्षणकोणगृहीतकरुणयो

तवा ऽयन्दृक्कोणाकलितकरुणोन्नीतजगतः
स्मितभ्रान्त्या ऽऽगण्डाञ्चिबुक मनुराग ॐ प्रसराति ॥

( २७ )

इदन्दूराद् दृष्टन्दलितदुरदृष्टम्मृदुपद–
म्पुरा सूते भूतेश्वरनयनपूतेषु शरणम् ॥
तदा किम्वक्तव्यन्तव भवति ! भव्यं यदि भवेत्
कृपादृष्टिस्मेरम्वदनमिह हेरम्वजननि ! ॥

( २८ )

अनास्था वन्धूके पुनराधिमधूकं विरसता–
तिलन्तत्स्मेरेन्दीवरामिति कियत्प्रायकलनम् ॥
अतस्तुल्याभावादविषयविशेषप्रभमिद–
म्प्रसन्नंवन्देऽहं मुखमिव तवैवेश्वरि ! मुखम् ॥

( २९ )

समुल्लासश्चित्ते वहिरपि च वित्तेशविभवः
शरीरे कन्दर्पस्मयलयपटु ॐका ऽपि सुषमा ॥
दिगन्ते विश्रान्तिर्जननि ! यशसां वाचि पटुता
तवोन्मीलन्नीलाम्बुजनयनलीलापरिणतिः ॥

---

द्राक्षितजगद्यया तस्यास्ते इत्यर्थः ४ अनुरिति लक्षणे चिवुकान्वयी रागो ऽनुरागो वा–रक्तिमेति सामान्यगम्यो ऽर्थः विशेषस्तु सर्वत्र पद्येपु विशेषविद्भिरनुसन्धेयः

( २७ ) १ शिवनयनपवित्रेषु–अन्यत् स्पष्टम्–

( २८ ) तत्तन्मुखैकदेशोपमानत्वात्–२ तेभ्यस्तेषाम्विशेषाच्चेति भावः ३ अतुल्येतरकान्ति मुखविशेषणम्–४ अनन्वयः ।

( २९ ) गर्वध्वंसचतुरा–सुषमाविशेषणम्–सुषमा परमा शोभा–

( ३० )

ममत्वद्वात्सल्यात्पुलकयति रागादपि तनुं
मरन्दोन्मत्तेन्दिन्दिरविदलदिन्दीवरनिभम् ॥
द्रुतन्दृष्टे दीने मयि सुकृतिहीने तव दया-
गलन्नीरैर्नेत्रम्प्रविरलितविन्द्वञ्जनयुतम् ॥

( ३१ )

द्युषच्छित्तादत्तो ऽत्तंतत्रिभवपत्त ॐ प्रणमताम्
क्षणाँ ॐ त्तेभ्यो भित्तागुरुगरिमसाक्ष्यैकविषयः ॥
त्तमः सर्वत्रा ऽयञ्जगदुदयरक्षात्तयकरो
ममाक्षय्यम्पापं त्तपयतु कटाक्षस्तव शिवे ! ॥

( ३२ )

अहो माद्दग्दीनाधमपरवशांनाङ् खलु गिरां
शरण्येतीवांसां स्थितिपरिचितेस्त्वच्छ्रवणयोः ।
विशन्तीनां शम्भोः पटुनटननीतौ निपुणता-
न्दिशन्तीयन्ते दृक्छुतिकुहरकूले विहरति ॥

---

( ३० ) पुष्परसमत्तभ्रमरकलितविकसन्नीलकमलतुल्यम्- २ प्रविरलिता विन्दवो यस्मिंस्तेनाञ्जनेन युतम् द्वयमपि नेत्रविशेषणम्

( ३१ ) १ द्युषदो देवाः २ विपुलैश्वर्य्यैः ३ कल्याणि महोत्सवः ४ शिव नाम-स्पष्टमन्यत्

( ३२ ) १ गिराँव्विशेषणम्-२ शरणे साध्वीति हेतोः ३ गिराम् ४ हेतौ पञ्चमी ५ इत्यपि गिराँव्विशेषणम् ६ शम्भुसम्बन्धि नृत्यनयाधिकरणकनै-पुण्यकर्मकदेशानुकूलव्यापारवतीति शाब्दो बोधः स्वतन्त्रं दृग्विशेषणम्-७ श्रवणकूपप्रान्ते-वेदागम्य स्थल इत्यपि शब्दमर्य्यादया लभ्यते विहरति विचरति क्रीडति वा ।

( ३३ )

जगत्पा॑त्रीकृत्य प्रकृ॑तिनटने॑पथ्यनिरतः
कृतौ सर्व॑न्तत्तँद्रसमभिनयन्यः सँमरसः ॥
प्रभुः सँ॑र्वस्वान्ते मम तु करुणाँनाट्यविषये
कटाक्षस्ते भूयाद्धरहृदयरङ्गस्थलचरः ॥

( ३४ )

कृतज्ञेनाङ्गायजितनियतिगङ्गाधरयतेः
समाधिव्यापाराहरणपटुसाहाय्यकरणात् ॥
तनुत्यागे न्यासीकृतधनुरिवानङ्गकृतिना
तवाम्ब ! भ्रूभङ्गो मदघभरभङ्गाय भवतु ॥

( ३५ )

ललाटन्ते मध्ये परिकलितक॑स्तूरिकमदः
सुकेशान्ते कान्तं स्फुरितशशिकान्तोपलनिभम् ॥
विडम्ब्य व्योमान्ते धृतकलकलङ्कः पुनरयं
मुदे शङ्के मातः प्रतिपदि शशाङ्को न भवति ॥

---

( ३३ ) जगदेव तत्तन्नाटकीयपात्रीकृत्येर्थः २ प्रकृतिनटवेषनिपुणः यद्वा नटने इति सप्तम्यन्तं तत्र तथ्याचरणचतुर इति भावः ३ पटक्षेपादिना तत्तद्दृश्य दर्शनादिनिर्घो ४ शृङ्गार करुण शान्तादिरसजातम्–५ सर्वरसो ऽविषमरसोवा–६ सर्वेषाम्मनसि सर्वस्वावसाने वा मम कारुण्याभिनयक्षणे हरहृदयरङ्गभूमिविहारोभूयादिति योज्यम् ८ कटाक्षे प्रधाननटत्वारोपो विशेषणार्थगम्यः–

( ३४ ) १ जिता नियतिर्येन तस्याशिवयोगिन इति भावः समाधिहरण सहायतादानात् हेतोः कृतज्ञेनेत्यन्वयः अनङ्गकृतिनेत्यस्य विशेषणम् २ स्वदाहेन्यासीकृतधनुरिव तव भ्रूभङ्ग इत्यन्वयः

( ३५ ) १ कस्तूरीतिलकयुक्तामित्यर्थः २ अनुकृत्येर्थः

( ३६ )

अदूरे सीमन्ताद्बहिरुदितसिन्दूररसंना–
लिहांनवालालाटिकललितकालाधरकलाम् ॥
यथा व्याली मौलीभवदलिवरालीरुचिरसा–
वधान्येणीनेत्रे ! भवदलकवेणी दलतु मे ॥

( ३७ )

यदैवेदञ्जातञ्चमरमरीपाणिलुलितं
समीराञ्चचीराभरणभृतहीरांशुकलितम् ॥
तदाश्रीरम्बन्दे श्रितशतचकोरीरतिकरं
शरीरन्ते लीलायितमिलितकीरस्मितमुखम् ॥

( ३८ )

अतीता स्वर्वालाललितवचनालापितयशो–
विडौजस्सौराज्यप्रसरदभिलाषा जननि ! चेत् ॥
प्रणीतानन्दा ते स्मितहसितशीतांशुरचिर–
द्युतिस्फीता प्रीता नयन मधिनीता ऽकृतिरियम् ॥

---

( ३६ ) १ रसनान्तम्व्यालीविशेषणम् २ ललाटस्थचन्द्रकलामभिव्या–
प्यलिहानेत्यन्वयः ३ श्रेणीवद्धभ्रमरराजीव राजमाना वेणीविशेषणम्

( ३७ ) १ वायुना प्रेरितपटम्–इत्यर्थकं समस्तपदम् २ शरीरविशे
षणम् ३ रलयोः साम्यात्–श्रीयुक्तमित्यर्थः श्रियमीरयतीति वा व्युत्पत्तिः ३
चन्द्रभ्रान्त्येति भावः ४ स्मितमुखान्तर्लक्ष्यदशनेषु दाडिमबीजबुद्ध्येति भावः–

( ३८ ) १ स्वरित्यारभ्याभिलाषान्तं समस्तपदम्–ईदृश्याभिलाषाऽऽ
तीतेति समन्वयः

( ३९ )

अहो ते वात्सल्यं ह्रतसकलशल्यङ्कलयासि—
घृणां हित्वां सर्वापनयमपनीया ऽपि मनसः ॥
महामोहादन्धं बहुदुरितदुर्गन्धमपि मां
निजाङ्के निश्शङ्कन्तरुणहरिणाङ्काभवदने ! ॥

( ४० )

तुलाङ्कृत्वैभिस्ते कुसुमहिमरश्म्यादिभिरहो
जगन्मातु र्मत ॐ ! प्रकृतनरकान्ताङ्गतुलितैः ॥
शिवे ! किम्पापाय प्रथयति मतिः स्वन्नहि कवेः—
स्मृतेः सम्बुद्धौ चेत्त्रुटिरिति मभाल्पाम्मृष पुनः ॥

( ४१ )

क्व मान्या त्वम्मात ! र्जगदवितुरन्या ऽऽत्मवशिता—
क्व मे वामा रूक्षात्तरमुखरधामा स्तुतिरियम् ॥
तथाप्येषा रम्या तव भुवननम्याङ्घ्रिनिहिता—
यथा धूलिर्नीता सुमनसि परीता पवनतः ॥

---

( ३९ ) १ अपासितसर्वदुःखम्-कृत्वेति शेषः पुरोवर्तिमामित्यस्य विशेषणम् विधेयभूतम् २ कलयसीत्यनेनाधारतया ऽन्वेति—

( ४० ) १ साधारणनारीजनाङ्गोपमानीकृतैः कुसुमहिम रश्म्यादिभिरित्यस्य विशेषणम् २ एभिस्ते तुलाङ्कृत्य। कवेर्मतिः स्वम्पापायकिन्न प्रथयति अपि तु प्रथयत्येव यद्येवन्तर्हि एणीनेत्रे हरिणाङ्काभवदने इत्यादिकथनम्ममापिदोष एवेति परिहराति चतुर्थचरणेन—

( ४१ ) परमेश्वरस्यापरा स्ववशीकृतिरूपा त्वङ् क्वेत्यर्थः

( ४२ )

अहो पारे वाचां त्वमसि यदतो मे स्तुतिरियम्
जगन्मय्या मातुः स्मरणमिति वा ऽज्ञानसरणिम् ॥
दधत्या मामङ्के प्रणमनमथो मर्षय शिवे !
गुणो वा दोषो वा तव कृतक शक्तेर्विलसितम् ॥

( ४३ )

क्वचित्काश्या म्मात ! स्तव पदमुपेत्यैव नितरां
करोटौ भिक्षार्थम्प्रणिपतितमूर्ध्नि प्रियतमे ॥
ममत्वञ्चेत्स्नेहः स्मृतिमुपहृतां कल्पय पुरस्-
क्रियाङ्काशीनाथे विरलतरवाचाम्परिणतिम् ॥

( ४४ )

इला वा कीलालन्दहनपवनौ किञ्च गगनं
त्वया शक्त्या ऽशून्यं सकलमिति तत्त्वं सुविशदम् ॥
विशेषाणामेषां विनिमयपरेपान्तव पुनः.
प्रपञ्चे पञ्चत्वन्नयासि तदु तत्त्वं व्यवहृतेः ॥

---

( ४२ ) तान्तामज्ञानसरणिम्मर्षयेति योज्यम्-

( ४३ ) १ शिवे गृहीतभिक्षार्थकपाले एतां स्मृतिम्- स्तुतिवाक्परिणति-रूपम् पुरस्क्रियाङ्कल्पयेति सारोऽर्थः किञ्चैतन्नामके मम सुहृदीत्यप्यर्थः

( ४४ ) १ इलेत्यादिगगनान्तम्पञ्चभूतं त्वया शक्त्या कृत्वेति शेषः शून्यमवस्तु महदादितत्प्रकृतिभूतायान्त्वयि शक्तौ स्थितायामकिञ्चनमेवैतत् क्रियतेति भावः यद्वा त्वया शक्त्याऽशून्यम्भूतमेवैतादित्येवन्त्वन्मूलत्वादमूल-त्वाद्वैषां तत्वं सुविशदम् स्पष्टीकृतमित्यर्थः वेदान्तनये तदतिरिक्तस्य कस्याप्य-भावात्—न्यायनये कारणत्वत्ततत्पदार्थत्वाङ्गीकारेऽपि शक्तिसहकारेणैव तत्त

( ४५ )

शिवा जाता पुंसे वितरसि तदाकारिणि ! शिवम्—
प्रसूर्बीजक्षेत्राङ्कुरमिति गुणानङ्कुरयसि ॥
उमाऽऽकाराद्वादौ विनिमितिरथोंकारविषया—
स्वतन्त्रा त्वन्तस्मात्सुकृतिपरतन्त्रा विजयसे ॥

---

त्कारणताया अभ्युपगमात् शक्त्यशून्यत्ववादे समञ्जसमेवैतदवच्छेदकतया वा शक्तेस्स्वतोऽङ्गीकारात्—पंचत्वसमनियतत्वमभेदेवारयति विशेषाणामित्यादिना अयम्भावः पुनरेवंसत्यपि विनिमयपरेषांविस्त्रानुविस्त्रनादिच्छलेनविपर्य्यासविमिश्रणादिना तत्तदध्यासतत्पराणां तव भवत्या विशेषाणाम् विशेषगुणानामप्रासिद्धयेऽपिप्रासिद्धया दृष्टिभेदकानाम्प्रपञ्चेऽनियत्या विस्तारे पञ्चत्वम्पञ्चभेदभिन्नत्वमनैयत्ये विस्तृतत्वन्नयसि तत्-उ-वितर्के व्यवहृतेर्व्यवहारदशायास्तत्त्वम्-यद्वोतत्वमेकम्पदम् व्यवहृतेः प्रोतत्वमित्यर्थसंक्षेपः यथायथमन्येषामपि दर्शनानामिहैव समन्वयसम्भवादिति दिक् ।

( ४५ ) १ पुंसे परमपुरुषाय तादर्थ्ये चतुर्थी शिवा स्त्रीत्वविशिष्टप्रकृतिका जाता— हे तदाकारिणि ! तत्पदप्रतिपाद्यवस्त्वभिन्नाकृते ! शिवं वितरसीतिसंबन्धोन्वयः सांख्यविदाम्प्रकृतेरेव कर्तृत्वात्—त्वमेव पुरुषायाधीशिषेत्वमेव च शिवम्वितरसीति तदधिष्ठात्र्यपिलिङ्गवैविध्येऽपि त्वमभिन्नेति तत्तद्योगयाथातथ्येनाभेदस्थितिरेवेति भावः— पुंसे भक्तजनाय वेत्येकांशिकम्— किञ्च मीमांसितकर्मोत्पत्तिगुणफलाद्यभिधायकवाक्यैर्निर्णीततत्तत्स्वरूपस्यैवेष्टो पलब्ध्याकारपरिणत्यादिफलकत्वेनाभिधानेत्वमेवैभिस्त्रिभिर्लिङ्गैः स्समासव्यासाभ्यां सद्यादृष्टतत्फलस्वरूपतया बीजक्षेत्राङ्कुरमिति समाहारे : नपुंसकं कर्म प्रसूस्त्वमंकुरयसीत्यर्थः इदानीमोङ्कारपरिणामभूताकारत्वमुमात्वं व्याहरति-ओमित्येतद्विषया विनिमितिरेकस्मिन्नन्यथाकारभानं विपर्य्यासोवा- अयम्भावः विवर्त्तवादेप्रणवब्रह्मण आदौ आकारादाकारिविवर्त्तादुमात्वम्भ-

( ४६ )

त्रयीं नाम्नामेतां शिवसुमनसाऽऽम्नातविषयां–
गुणैर्वा लिङ्गैर्वा शिव शिव शिवोमापतिरतिम् ॥
विभाव्यैवं य स्त्वां, स्मरति तरतीमं श्रममयं–
कृतंवा कृत्यम्मे सकलकरणात्मप्रयतितम् ॥

( ४७ )

नन्दन्त्वद्य जगन्त्यमन्दमहिमोद्रेकावलोकादथो–
मोदन्तामधिनोऽपि विद्रुतदरा देव्या दयाजागरैः ॥
अम्बेयं विदधाति रामभवनोपाध्यायशिष्यस्य मे–
सर्वैरप्यवहेलितस्य पतितस्योद्धारसम्भारकम् ॥

---

वसीतिशेषः किञ्चोमेत्यत्रोकारस्यादौ वादावाकारस्वरयोजनादोमितिरूपं सिद्ध्यतीति त्वत्त एवाक्षरब्रह्मावगम इति तत्तद्योगाभ्यासाद्युपायैर्ध्येयभूतान्ब्रह्म साक्षात्काराय त्वमेवेत्यतः सुकृतिपरतन्त्रा स्वतन्त्रा त्वं विजयस इति संक्षेपः–

( ४६ ) १ एताम्पुरोवर्तिनीं शिवशिव शिवेति प्रकृतिमात्रप्रतीतिविषयां नाम्नां त्रयीमुमापतेरतिर्यत्रेति-यद्वा रतेरेव विशेष्यतयाऽऽभेदेतत्पुरुष एव–शिव-सुमनसेत्याद्यपितद्विशेषणमेव गुणैर्वा सत्वरजस्तमसामेव साम्योपचयापचयै-स्तत्तल्लिङ्गभेदस्य शाब्दिकैराम्नातत्वात् तेषामेव लिङ्गत्वादभेदेनान्वयः यद्वा लिङ्गैस्तत्तदाकारचिह्नविशेषैर्वैकत्र भेदबुद्ध्या शिवारूपेण शिवइतिरूपेण शिवमितिवैवम्भिभाव्य यस्त्वां स्मरति स सकलकरणात्मप्रयतितम् श्रममय-ङ्कृतंवा कृत्यं वातरति मे इति शेषः अयं सश्रमं वा तरति तेनैव श्रमोऽयन्तीर्ण इति दिग्दर्शनम्—

( ४७ ) १ अस्मादित्यर्थः २ निर्भयास्सन्त इति भावः ३ प्रोफेसर गवनमेण्ट सं० कालेज काशी गुरोर्नाम—

( ४८ )

इदं स्तोत्रम्मातुर्वदनमधिनीतङ्कचिदहो-
शतं सूतेऽभीष्टम्भुवनजननीप्रीणनदिशा ॥
निशादौ सौराज्यम्बुधविजयिविद्याविलासितिं-
निशार्द्धे ताः सिद्धी १ पुनरपि निशान्ते त्रिदशताम् ॥

( ४९ )

वुध १ कान्तारामो यमजनयदेकन्तनुजनिं-
स मर्यादादेव्याम्प्रविदितमुमापत्यभिधया ॥
कृतन्तेनाम्बायाः स्तवनमधिकाशि प्रवसता-
शिवाख्यन्तत्तुष्ट्यै तदहरहरेतत्प्रभवति ॥
विद्यानुरागिजनतागुणसूचिकेव-
निर्मुद्रितैकशिवमूर्त्तिनवेन्दुवर्षे ॥ सं. १९८१ ॥
शैवेय्यसौ स्तुतिरुमापतिवाङ् मुदे स्तात्-
सत्यप्यसत्यापि च विश्वजनीनदृष्टिः ॥

॥ श्री शिवा पातु ॥

---

( ४८ ) १ प्रसत्तिमार्गेण-( ४९ ) प्रसिद्धपरामर्शि-इति श्रीश्याम-सुन्दर-शर्म्मकृता शिवाटिप्पणी समाप्ता । श्रीशिवार्पणमस्तु ।



## ॥ अथ श्रीकुबेरनाथमाहात्म्यम् ॥

( १ )

काश्या ऽ पुरः श्रीगिरिजापतेरुदक्-
क्रोशे चतुष्षष्टिमिते स्थलं क्षितौ ॥
किमप्यपूर्वं वरिवर्त्ति जृम्भितं-
स्तुतं समस्ताक्षितिचारिभि र्नरैः ॥

( २ )

श्रीजानकीजन्मभुव ऽ प्रतीचिदिग्-
भागेऽप्ययोध्यापुरपूर्वतः स्थितम् ॥
अवाक्च नेपालपशम्भुलिङ्गतो-
ध्रुवँ व्यथा तीर्थभुवां हृदुद्धुरम् ॥

( ३ )

नानालतासन्ततिसन्ततं स्तृतं-
समुन्नतम्भूधरभूमिसन्निभम् ॥
तमालतालद्रुमशालशालितं-
रसालजालैरभितोऽभिशोभितम् ॥

( ४ )

समुन्नताश्वत्थपुराणरोहिणा-
दिकैश्शुभच्छायमपायबाधकम् ॥
प्रफुल्लवीरुद्गणगन्धसम्पतत्-
प्रमत्तभृङ्गैरपि मञ्जु गुञ्जितम् ॥

( ५ )

नानासरः कूपसुरूपितं क्वचित्-
क्षेत्रं कुबेरस्थलनामविश्रुतम् ॥
क्वचित्प्रगीतं विविधैर्विहङ्गमैः-
सुदर्शनैश्श्रोत्रमनोहरम्वरम् ॥

( ६ )

नानाविधैः सिद्धगणैरधिष्ठितम्-
पुरा पुराविद्भिरनेकशः स्तुतम् ॥
विभूतिमद्भूतलभूषणीभव-
द्भुवीव भातीश्वरभूधरः परः ॥

( ७ )

धनाधिपस्यात्र तपःप्रभावजं-
तदीयनाम्ना विदितन्धरातले ॥
संस्थानवैषम्ययुगप्युपोर्जितं-
स्वयम्भुलिङ्गम्वरशालिशूलिनः ॥

( ८ )

समेधतेऽनाद्यविविक्तसम्भवम्–
भवानुकम्पैकनिदानमुच्छ्रितम् ॥
कुबेरनाथाऽभिधयाऽधिसंस्तुत–
न्न कस्य कामानिह पूरयत्यदः ॥

( ९ )

असावसाधारणगौरवान्वितः–
कुबेरनाथऽकमनीयसंश्रयः ॥
स्मृतोमनागप्यधिमानसञ्जनै–
रनेकथा संविदधाति वाञ्छितम् ॥

( १० )

अमुं विधायेश्वरमक्षिगोचर–
श्चरन्त्यभीकागरसागरम्भवम् ॥
नरस्तरन्त्येव सुदुस्तरन्तथा–
सुपूजितो यैर्जित एव तैर्यमः ॥

( ११ )

अनेन लोकोपकृतीर्विधित्सुना–
शिवेन सर्वोत्तरशक्तिशालिना ॥
न ये स्वकामैरभितर्ष्पिताऽपरा–
श्चिता तदीया ननु भाग्यभूमिका ॥

( १२ )

समात्मसम्भेदनसाम्यशालिनी–
शिवैतदर्द्धाङ्गमुपास्त्यदो वशा ॥
जगद्विधानैकपराऽपि तद्गुणा–
न्नरः समर्थः कतरोऽभिवर्णितुम् ॥

( १३ )

न यत्र मूर्च्छन्त्यपि मारुता गुणा–
न जातु जैवातृकचित्रभानुजाः ॥
न वा प्रकाशा इतरेऽधिकारिण–
स्तदप्रकाशं विचकास्त्यदः पदम् ॥

( १४ )

असौ प्रकृत्या शिवयाऽधितोषितो–
गुणत्रयीयोगविशिष्टया तया ॥
अवाप्य भूयोऽभिनयानिदम्परान्–
महानटो भूमिकया विवर्त्तते ॥

( १५ )

दलम्फलं वा जलमेव केवलं–
मनाङ् मनो वाऽर्प्पितमस्य पादयोः ॥
फलत्यलभ्यान्यलमत्र लम्भिता–
पुरस्क्रिया काऽप्यफला न लभ्यते ॥

( १६ )

अमुष्य लिङ्गस्य हि मूलमार्गणै-
रिदम्प्रभुर्भूनिरखानि केनचित् ॥
पराञ्चि चानाऽप्यहिसंस्थितिं यतः-
पराश्रितौ विष्णुविधी परस्तु कः ॥

( १७ )

असौ प्रजास्स्वास्सुतवित्तवाञ्छिनी-
र्ध्वजांशुकैराह्वयतीव लोलिभिः ॥
प्रतर्प्पितुन्तुङ्गतरङ्गितद्युतौ-
वसन्निवाभ्रंकषकाशिमन्दिरे ॥

( १८ )

अमुष्य पादावुपवन्द्य कर्हिचि-
ज्जटान्तगङ्गेक्षणतार्ज्जिताऽप्यमुम् ॥
विदूरतो लोलति लोलुपान्तरा-
तरङ्गिनारायणगण्डजा नदी ॥

( १९ )

असुं समीपस्थितभूपसागरा-
भिधस्य तीरं सरसस्समाश्रिता ॥
सुजल्पयन्ती स्वकमूकसेवका-
नुपास्ति जल्पाभिधया सरस्वती

( २० )

अदूरतश्चाप्यतुल्योदया दया–
मयीह जागर्त्ति वरोन्मुखा नृषु ॥
अपारकारुण्यसभाजितत्रयी–
परमभावा खनिवारवासिनी ॥

( २१ )

अलं हि तीर्थाध्वरदानया जना–
समाधिभिर्यावदसौ महेश्वरः ॥
कृपालुराराद्नुकम्पते जना–
न्दिवा न दीपप्रभया प्रभूयते ॥

( २२ )

सदा फलस्यापि पुराणवेदनै–
रुमापतेरस्य विशेषता परा ॥
सितेतरासु प्रतिवर्णिता जनै–
रुपेयते मासचतुर्दशीष्वहो ॥

( २३ )

ततोऽपि माघेऽथ ततोऽपि फाल्गुने–
ततोऽपि वैशाखचतुर्दशी तिथौ ॥
अमुष्य शक्ते ॐपारिबृंहणाम्विदु–
स्ततोऽत्र सम्मेलविशेष ईक्ष्यते ॥

( २४ )

विशिष्टजाग्रत्पणपण्य वीथिकं–
समस्तवस्तुक्रयविक्रयोर्ज्जितम् ॥
भवत्यदोदर्शनहेतुकन्तदा–
महद्दिगन्तागतलोकसङ्गतम् ॥

( २५ )

न काशिकायामधिगङ्गमर्पितं–
न वा प्रयागे त्रिक संगमे तथा ॥
न वा कुरुक्षेत्रधरासु कल्पते–
फलाय दत्तन्तु यथेह किञ्चन ॥

( २६ )

माहात्म्यदिग्दृष्टिधियेदमीरित–
म्मयास्य संक्षिप्ततरं हि वर्णनम् ॥
अदो भवेत्साधु सदो मुदे सदाऽ–
धुनातनङ्किञ्चन सान्निशम्यताम् ॥

( २७ )

अत्र श्रीजगदानन्द, शर्म्मणा ब्रह्मचारिणा ।
विद्यालयो य आस्थापि, ब्राह्मणान्ब्रह्म वेदितुम् ॥

( २८ )

प्रत्यहं सोऽभ्युदयते, माहेश्वरकृपाश्रयः ।
आश्रितोबहुभिश्छात्रैः सर्वशास्त्रमपिप्सुभिः ॥

( २८ )

( २९ )

अध्यापयन्निह कुलानि शतन्द्विजानां-
श्रीश्यामसुन्दरबुधेन समं समन्तात् ।
हृद्येन सर्वगुणग्राहिधिया तदीय-
स्वान्तोद्गतप्रणयराशिवशंवदोऽहम् ॥

( ३० )

पूर्वं शिवास्तुतिमकार्षमिमान्तदीय-
कीर्त्त्या कुबेरपदवर्णनयैव साकम् ॥
निर्मुद्रयामि सुधियः परिशीलयन्तु-
याचेतरामहमुमापतिरित्यजस्रम् ॥

( ३१ )

कुबेरनाथं संपूज्य सोमे वा शुक्रवासरे ।
अधीयानोऽथवा शृण्वन्नेतत् पापैः प्रमुच्यते ॥
* श्रीकुबेरनाथः पातु *

॥ इति ॥

